# VASANTATILAKA

BY

BARADĀCHĀRYA.

EDITED BY

PANDIT JIBANANDA VIDYASAGARA B. A.

Calcutta:

PRINTED AT THE VALMIKI PRESS.

1872.

*To be had from Pandit Jibananda Vidyasagara B. A. Govt. Sanskrit College of Calcutta.*

Digitized by Google

# वसन्ततिलकभाणः ।

श्रीवरदाचार्य्य विरचितः

बि. ए. उपाधिधारिणा

श्री जीवानन्द विद्यासागर भट्टाचार्य्येण

संस्कृतः

कलिकाताराजधान्याम् ।

वाल्मीकियन्त्रे मुद्रितः

१८७२

Digitized by Google

Digitized by Google

# वसन्ततिलकम् ।

जयन्ति जगताम्मातुस्स्तनकुङ्कुमबिन्दवः ।
मुकुन्दाश्लेषसङ्क्रान्तकौस्तुभश्रीविडम्बिनः ॥ १ ॥

अपि च ।

क्रीडाभिन्नहिरण्यस्तम्भकुहरे रक्षात्मनावस्थिताम्
हारं हारमुदारकुङ्कुमरसानव्याजभव्यान्नखैः ।
वीरश्रीकुचकुम्भसीम्नि लिखतो वीरस्य पत्रावली-
स्तत्कालोचितभावबन्धमधुरं मन्दस्मितं पातु नः ॥ २ ॥

नान्द्यन्ते सूत्रधारः ।

सूत्र । सविनयानन्दम् । भो भोस्समन्ततस्सन्ततमधुमदमुदित-मत्तकामिनीविलासविवशापाङ्गशृङ्खलितविशृङ्खलविविधरसि-कजनविहारहारिणी हरिहरहिरण्यगर्भादिनिखिलसुरासुर-मणिमुकुटोपलालितशासनस्य भगवतो मकरध्वजस्य पूजोत्-सवारम्भसम्भ्रान्त-सकलवारविलासिनी-समादेशसम्पादनचटुल-विटनिबिडनिबद्धसञ्चारा काञ्चीपुरी । समन्तादवलोक्य सान-न्दम् ।



229917

Digitized by Google



निरन्तरनिरवधिकमधुरविविधरसभरितनिरवद्यगद्यपद्यमयभारतीभरितसङ्गीतसाङ्गानङ्गनिगमनिरतिशयपरिचयतरङ्गितनिखिलकलाकलापविस्ताराः सर्वे सभास्ताराः । ससम्भ्रमम् आकाशे कर्णं दत्त्वा । किम्ब्रूथ ? सकलजनहृदयानन्दकन्दलीविकसनविदग्धमुग्धमधुरगम्भीरनिबन्धबन्धुरं किमपि रूपकमभिनेतव्यमिति ? स्मरणमभिनीय । श्रुतं हि मया निखिलनगरातिशायिन्यां सकलकलाकलापविस्तारशालिन्यामुज्जयिन्याम् । यथा किल ।

काञ्चीपुरे कविरभूद्वरदाख्यनामा
सूनुः सुदर्शनकवेर्घटिकाशतस्य ।
वेदान्ततर्कविविधार्थविचारधीरो
बालस्तो वसन्ततिलकं स बभाण भाणम् ॥

स भाणः सकलहृदयानुरञ्जकः सुप्रयोग इति, अहमपि तमेव प्रयुञ्जानः सामाजिकानुपतिष्ठे ।

अलङ्कारवती सूक्तिरभिनन्द्यगुणा सती ।
सभायां सरसैर्वाक्यैः सन्तोषयति मे मनः ॥

किम् ब्रूथ ? तस्य तर्ककर्कशहृदयस्य कथमेतादृशमुक्तिमाधुर्य्यमिति ? स्मृतिमभिनीय । भवन्त एव खल्वेवमादिशन्ति ।

तर्केषु कर्कशतराः स्युरथापि पुंसां
काले भवन्ति मृदवः कवितासु वाचः ।
दैवेभशैलकुलिशं दयिताकपोले
नाथस्य कोमलमुदाहरणं नखं नः ॥

पुनः कर्णं दत्त्वा । किम्ब्रूथ ? साधु सम्यगुक्तम् ?

समुल्लासो वाचां सरसमधुनिष्यन्दलहरी-
समुन्मेषद्वेषी सकलरसपोषोपजनकः ।
न केषामाधत्ते मनसि परितोषं नवनवै-
र्विलासैरुन्मीलद्विकचितमधूलीपरिमलः ॥

यदि तस्य कवेः प्रबन्धः, सत्वरेण भवताभिनेतव्यमिति ?

सपरितोषम् ।

सोऽयं चेत्कविरत्र सुन्दरगिरः सन्त्येव तेषामसौ
मध्ये कोऽपि वयं च नाट्यरचनापाण्डित्यपारङ्गताः ।
भावज्ञेष्वभिरूपकेषु मधुरस्तत्सर्वमास्तामियं
सारज्ञा हि सभा किमन्यदधुना वाञ्छानुकूलो विधिः ?

परिक्रम्य दिशोऽवलोक्य साश्चर्य्यम् ।

मधुकरपरिमृष्टमाधवीनां मलयसमीरविलोलमञ्जरीणाम् ।
कथयति मधुमासवासराणामुपगतमुन्मदकोकिला वनश्रीः ॥

अपि च ।

मन्दानिलेन मधुरं परिनर्त्तितायाः पर्य्यायतः प्रचलदङ्गुलिपल्लवायाः ।
मञ्जुस्वरैर्मधुकरैरुपगीयमानं नाट्यं मनोहरमिदं नवमल्लिकायाः ॥

नेपथ्ये । साधु भरतपुत्र ! साधु । प्रस्तुतानुकूलवर्णनेन वन्दनीयोऽसि । अपि तु नवमल्लिकेतिस्थाने वासन्तिकेति वक्तव्यम् । अथ खलु त्रिभुवनविजयिनो मकरध्वजस्य विजयवैजयन्ती वसन्तसेनायाः कनीयसी भरताचार्य्यशिक्षितनिखिलनृत्यविद्या-प्रथमरङ्गाऽधिरोहणमहोत्सवसम्भावितनिखिलकुशीलवनिकरोपगीयमाना नृत्यति वासन्तिका । वयमपि तदवलोकनाय त्वरिताः समागच्छामः ।

तव । श्रुत्वा सहर्षं । त्वर्य्यतां त्वर्य्यताम् । अहमप्यमुना शृङ्गारशेखरेण सम्भूय तस्या महोत्सवमनुभवामि ।

इति निष्क्रान्तः प्रस्तावना ।

---

ततः प्रविशति शृङ्गारशेखरः ।

शृङ्गारः । सवितर्कम् ।

तालावधौ तरलकुण्डलगण्डमूलं
दुर्वारघर्मजलदूषितपत्ररेखम् ।
तस्या मुखं तरललोचनचन्द्रिकाया
धन्यो विलोकयति तादृशमन्दहासम् ॥

समन्तादवलोक्य । अहो खलु रमणीयता प्रभातवेलायाः । इदानीं खलु ।

मालिन्यं परिदृश्यते हिमरुचौ, मन्दश्रियस्तारकाः,
शीताः केचन सञ्चरन्ति कमलामोदस्पृशो मारुताः ।
आसीदन्ति च चक्रवाकमिथुनान्यन्योऽन्यमुत्कण्ठया
पादैस्ताडितकैरवा मधुलिहो गच्छन्ति पद्माटवीम् ॥

अपि च ।

किञ्चिद्विश्लथकेशवान्तकुसुमाः, क्रीडाविलोलांशुका,
लुप्तालुप्तशरीरचन्दनतया लोकैकनेत्रोत्सवाः ।
सम्भोगश्रमविक्लवैरवयवैः सङ्केतशालान्तरा-
न्निद्राशेषकषायितार्द्धनयना निर्य्यान्ति वाराङ्गना ॥

Digitized by Google

पुरोऽवलोक्य सकौतुकम् । एष खलु हेषारवपरिकुपितवनमहिषविषाणकोटीपाटनभयचकितरथतुरगविषमितरथचरणसंघट्टनविघट्टितविकटकटकधातुधूलीपुञ्जरञ्जित इव पिञ्जरवपुरुदयाद्रिशिखरमारूढो भगवानंशुमाली । इदानीं खलु ।

आपाटलैः प्रथममङ्कुरितैर्मयूखैरंशुमान्पतिः प्रथमशैलविहारिणीनाम् ।
सोऽयङ्करोति सुरपुङ्गवसुन्दरीणां कर्णेषु कल्पतरुपल्लवभङ्गलक्ष्मीम् ॥

किञ्च ।

तरुणान्दिवाकरमयूखमञ्जरीमरुणामशोकशिखरावलम्बिनीम् ।
कमनीयपुष्पमनसा समाश्रितां मधुपो विडम्बयति मञ्जुभाषिणीम् ॥

सौरभाघ्राणमभिनीय सलज्जम् । सत्यं मधुकर इवाहमपि वासन्तिकाऽनुरक्तहृदयः परिभ्रान्तोऽस्मि । सत्यमशोकमञ्जरीमेव भजते मधुकरी । सवितर्कम् । अधुना निखिलकुसुमहेतुना वसन्तेन भवितव्यम् । समन्तादवलोक्य ।

उद्वेलपद्ममुदञ्चितबालचूतमुद्दामकेशरमुदारसमीरपोतम् ।
उन्निद्रपद्मपरमुल्लणकर्णिकारमुच्चैरिदं हि मधुवासरमाविरासीत् ॥

अहो रमणीयता वसन्तस्य ।

मन्दम्मन्दं मलयपवनो मल्लिकासूत्रधारः
पायं पायं मधुपरिमलं पाटलीकुड्मलानाम् ।
मध्ये मध्ये विरचितमतिर्माधवीमण्डपानां
क्रीडाखेदं हरति शनकैः क्रीडया सुन्दरीणाम् ॥

अहो सार्वत्रिकता प्रेमानुबन्धस्य ।

उद्दामगन्धकुसुमस्मितशालिनीमामुद्यानचूततरवो नवमालिकानाम् ।
आपूरयन्ति मकरन्दरसैः स्वकीयैराकल्पितं कुसुमपांसुभिरालवालम् ॥

Digitized by Google

अन्यतोऽवलोक्य सकौतुकम्।

अङ्गारश्रियमातनोति नितरामापाटलं पल्लवं
धूमश्रेणिविडम्बिनी पुनरसौ निर्याति भृङ्गावली।
पुष्पाख्याश्च च संस्फुटन्ति कतिचित् स्फुलिङ्गानि मन्दानिलैः
प्रस्फुटे दग्धुमसौ जगन्ति मदनः सन्तापयत्याशुगान्॥

अतिचिरस्थायी वैरानुबन्धः स्थावराणामपि। तथाहि,

पादताडनमशोकपादपाश्चिन्तयन्त इव हन्तुमङ्गनाः।
मन्मथाय महनीयसौरभाण्यर्पयन्ति खलु हन्त सायकान्॥

साश्चर्यम्। सर्वस्वान्यपि कुसुमशरचापविजृम्भितानि। यतः,

छायासादकषायितैर्मधुलिहामालापवत्यः स्वरै-
रन्तःपल्लवजृम्भमाणसुमनःसन्दोहमन्दस्मिताः।
उन्मीलन्मकरन्दघर्मसलिलैरुत्कण्ठकाः केसरै-
राक्रीडन्नववीरुधः क्षितिरुहैराक्रीडवाटीं गताः॥

सर्वतोऽवलोकयन् वसन्तातिशयमभिनीय।

निद्रितरसालगन्धैर्मुदितकलकण्ठमुग्धसंलापैः।
किन्तैः केवलमदनैः समयैरस्पन्दचन्दनसमीरैः॥

पुरोऽवलोक्य। कथमियमनवरतविहरमाणवरयुवतिचटुल-
चरणमणिकटकरणितमुखरसौधवीथिका राजधानी। इयं हि।

अनङ्गप्रशस्तन्त्रामाङ्गराज्यश्रमेदिनी।
कमलाकान्तशुद्धान्तकेलिचङ्क्रमणस्थली॥

विभाव्य। प्रतमखनगरीमप्यतिशेते सकलगुणनिकरस-
ङ्केतशाला काञ्चीपुरी। जलनिधिसमाहृतकतिपयजलमानुषी-
मुखविकासवञ्चितचपलजनचिन्तायास्तस्याः कियती गरीयस्ता।

अत्र हि।

परिचयविशुद्धवीणावेणुमृदङ्गादिवाद्यविस्ताराः।
विख्यातरसिकविद्याः सर्वे स्वयमेव सिद्धसङ्गीताः॥

अपि च।

तत्रैको मघवानिह द्विजगणाः सर्वेऽपि रम्भापरं
मान्यास्तत्र परसहस्रमिह ताः कान्तोरुकार्द्धर्जिताः।
तत्रैको हि गुरुः कविश्च बहवस्तेऽप्यत्र वर्हिर्मुखाः
पौरैश्चन्द्रमुखैः किमत्र सदृशा मन्ये किमन्यैर्गुणैः॥

सकलनगरसाधारणी किमस्याः सकलसुरनिकरतोषकारिणी गुणश्रेणी। तथा हि,

इह मखमतनिष्ठ पद्मयोनिः स च पुनरत्र समुत्थितो मुकुन्दः।
अमुमिह कलयन्ति केऽपि धन्याः पुनरयमत्र ददाति वाञ्छितानि॥

पुरोऽवलोक्य सकौतुकोल्लासम्। सन्ततविरचितचटुलपवनेन वेपमानमकरध्वज-पटपल्लवसमुल्लसित-विटङ्कवाटिकाविशङ्कट-मणिगण-खचित-वेदिकाविहरमाण-विविधविटनिचयविचार्य्यमाणसाङ्गानङ्गतन्त्रविस्तारा बालकजनपरिचीयमानपरिवादिनीडमरुमृदङ्गमुरजझर्झरीमुखरसुधाधौतविविधधवलमन्दिर--निकुरम्बनिर्जितनीहारहारहिमगिरिदिगम्बरसितरोचिरम्बर-सरिदम्बुकम्बुशरदम्बुदकुमुदकुन्दा वसन्तवीथी। सप्रत्यभिज्ञम्। शृङ्गारपद्यानिषद्या खल्वियं वीथी। इह खलु।

कतिचन निवेश्य कामिनीनां मृगमदसौरभमेदुरे कपोले।
मुकुलितनयनं सुखानि धन्या निधुवनसन्धिषु निर्विशन्ति निद्राम्॥

सवितर्कम्। अत्रैव खलु सुहृदनङ्गशेखरकलत्रं चित्र-

Digitized by Google

लेखा, तावदेनां विलोकयन्नमुनैव मार्गेण गमिष्यामीति । वीथीं प्रविश्य पार्श्वतोऽवलोक्य सकौतुकम्, सफलमद्य संजातञ्चक्षुः ।

पश्चात्पीठनिषण्णया नखमुखैः पर्य्यायतः कुञ्चितै-
र्विस्रस्तां विनिकीर्य्य केशकवरीमाबद्धसीमन्तया ।
सख्या साकमुदीरितस्वजननीसम्भोगवार्त्तासुधा
बाला सौरभशेषचन्दनवती बालातपं सेवते ॥

निर्वर्ण्य ।

शशिपदमणिमालं चन्द्ररेखाभिरामं
ललितपुलकजालं घर्म्मविन्दुप्रवालम् ।
वपुरनघममुष्या वक्ति कस्यापि यूनः
सुरतकलहलीलासूक्ष्ममार्गाभियोगम् ॥

कुशला खल्वेषापि कुसुमशरगोष्ठीषु । साश्चर्य्यम् ।

मधुकरपरिभवकातरमासीदरविन्दमाननं तन्व्याः ।
अद्य तु विधिदुर्विपाकतस्तत्र च परिभूतमलककलापैस्तैः ॥

तावदेनामनुसृत्य गच्छामः । उपसृत्य पदान्तरे स्थित्वा ।

प्रत्यग्रचन्द्रलेखं परिमलशेषाङ्गरागरमणीयम् ।
अव्यवधानमनोहरमङ्गन्तव जयतु मदनसर्वस्वम् ॥

किमब्रवीषि किमब्रवीषि ? धन्यः खलु भवान्नवमालिकाषण्डेन, तव चाटुकरणेनेति ? रम्भोरु ! मैवं वादीः ।

अन्तःकूजदुदारकण्ठमसकृन्मुञ्चेति लोलेक्षणं
प्रायः स्मेरकपोलमूलमलसप्रस्यन्दि विम्बाधरम् ।
आधूताङ्गुलिपल्लवाग्रमसमित्यानर्त्तितभ्रूलतं
पीतं येन मुखं त्वदीयमबले सोऽयं हि धन्यो युवा ।

Digitized by Google

किं ब्रवीषि? गच्छ गच्छ विदग्धः खलु भवान् व्यवहार-विद्यास्विति?

गाढपीडितपरस्पराधरं कण्ठगर्भितकपोलकूजितम्।
अन्यथा वरतनो कथं विस्मरामि किमु ते रतोत्सवम्?

त्वयैव गन्तव्यमित्युक्ते तावद्गच्छामि। पदान्तरं कृत्वा साश्चर्य्यम्।

स्थित्वा विचित्रमणिमण्डपशालिनि रत्नपीठे
भाले गृहीतमुकुरा करपल्लवेन।
कालेयपङ्कतिलकं परिकल्पयन्ती
कैषा समुन्मिषति काचन कातराक्षी?

निर्वर्ण्य सप्रत्यभिज्ञम्। आः परिज्ञातम्, अनङ्गचन्द्रिकायाः कनीयसी कतिपयकालमस्मत्परिरब्धकलत्रं तारावली। कथ-मियमचिरात् सम्पन्नयौवना जाता। तथा हि

आयाति श्रियमञ्जसा नयनयोरम्भोजवप्रेयसीं
सन्नाहः स्तनयोरयं कलयते सम्भोगयोग्यान्दशाम्।
वैदग्ध्येन सहासिकां वितनुते वाचामियं प्रक्रियां
मुग्धायाः पुनरैन्दवीव सहते मुख्यामभिख्यां मुखम्॥

कथमियमस्यामेव वीथिकायामितस्ततः सञ्चरन्तमपि मामद्य विशेषतः सानुरागमालोकयति? भवतु एनामुप-सर्पामि। उपसृत्य। अयि कुशलमाकल्परचनायाः?

लोके कलङ्कमपहातुमयं मृगाङ्को
जातो मुखन्तव पुनस्तिलकच्छलेन।
तत्रापि कल्पयसि तन्वि! कलङ्करेखां
नार्य्यः समाश्रितजनं हि कलङ्कयन्ति॥

Digitized by Google

सासूयम् । किं ब्रवीषि ? कदाचिदिहागमनतयोऽपि भ्रमन्ति खलु घण्टापथेषु, यदस्मदावासदोषेण स्वप्नेऽप्यचिन्तनीयामि-मांवीथीमागतोऽसीति ? सपरिहासम् । सफलमद्य संजातं श्रोत्रं, यदमून्यक्षराणि श्रूयन्ते । कुतः पुनरियं शिक्षिता वैदग्धी ? यदात्मदोषमन्यत्र समारोपयसि ? किमेनमसम्भा-वयसि ? किन्न पश्यसि मामस्यामेव वीथिकायामनवरतसञ्चा-रिणम् । अथवा कुतस्ते दोषः प्रेमशालिन्याः ? अपि तु यौवनमदमेदुराया दृष्टेः या पुनरग्रतः स्थितमपि वस्तु न विषयीकरोति । अपि च । कपटानुरागकौसीदिकः खलु वेश्याजनः । तथा हि ।

आलापैर्मधुरैश्च कांश्चिदपरानालोकितैः सस्मितै-
रन्यान्विभ्रमकल्पनाभिरितरानङ्गैरनङ्गोज्ज्वलैः ।
आचारैश्चतुरैः परानभिनवैरन्यान् भुवःकम्पनै-
रित्थं कांश्चन रञ्जयन्ति सुदृशो मन्ये मनस्त्वन्यथा ॥

धृतिमभिनीय सरागम् । आः कष्टमनपराधिनमपि परि-जनमतिनिष्ठुरं निर्भर्त्सयन्ती कोपदट्टुवट्टुकी समापतति । प्रकाशम् । यदि मनसि न रोचते, वयमेव गच्छामः । कट्टु-जरतीरूपेण छायासुतास्त्र किमस्मानुद्वेजयसि । सप्रणयकोपम् । किं ब्रवीषि ? किमात्थ रे कितव ? साधु सम्यगुक्तम् । अय-स्कारवाटिकायां सूचीविक्रयवत् किमस्माभिरुपालम्भि । गर्भदासवदलङ्कारमञ्जर्या दास्यमाचरन्तं भवन्तमस्यामेव वीथिकायां कथन्नाम न दृष्टवती । किमेतेन गतमखिल-

मा स्म गाम। प्रलपतु जरती त्वं यत्किञ्चिदत्रैवाद्य त्वया स्थातव्यमिति। सोत्प्रासम्। परमनुगृहीतोऽस्मि।

अमलकनकपरिस्फुरत्कपोलं श्रवणसमाकुलकुण्डलाभिरामम्।
मुखमिदमुदितं शशाङ्कवत्या मुहुरभिवाञ्छति वीक्षितुं मनो मे॥

तथाप्यस्याः कामुकजनसुखकालरात्रेरग्रतः स्थातुमशक्तो, गच्छामि गृह्यतामाशीः, अथवा किमाशीर्वादेन ते सर्वाशिषामुपरि वर्तमानायाः? पदान्तरे स्थित्वा। आः कष्टमग्रत एव जरती। सक्रोधम्। मामियं पिशाचमुखी तर्जन्या तर्जयन्ती किं प्रलपति॥

"रे रे धूर्तजनधौरेय दरिद्रचूडामणे! कृपणाजन! मूर्द्धन्यवार्द्धकिनेयभगिनीभुजङ्गजीर्णशूर्पेण निहत्य निष्काशितोऽपि शङ्काहीनः पुनरपि समागतोऽसि? रे मानहीन! किमित्थं सुलभा तारावली? किन्न पश्यसि जात्यन्धपण्यकलत्राणि विक्रीय पण्यकलत्राणि परिपालयतो भाग्यपुरुषान्?" एतत् किं कुक्कुटोपाध्यायशिक्षितकुटिलविद्यादर्शनस्थानम्? "प्रतिश्रुतं धनमदत्त्वा न गन्तव्यम्।" सोद्वेगस्मितम्। श्रुतानि श्रोतव्यानि, यदि सन्त्यन्यानि कथयितानि, तान्यपि कथय। सक्रोधसम्भ्रमं छुरिकामुद्यम्य। अरे नीचकुट्टनवृद्धे! किमुपाध्यायमपि स्पृशसि? तारावलीमुद्दिश्य। पश्याणि परुषभाषितानि सोढानि, इतः परं यदि ब्रूया अनया शूर्पणखामिव कृत्वा गच्छामि। "गच्छ गच्छ हीनजन!" दृष्टिमेव द्वारं जानासि मे हस्तमिति सधैर्यमवलम्ब्य। साश्चर्यम्। कथमपि कालसर्पमुखान्निष्क्रान्तोऽस्मि। सखेदम्। अमन्दधीरश्यामनयैव

दूषिता तारावली। सविमर्षम्। कथमस्यामुत्पन्नापि सकल-भुवनैकरत्नं तारावली। यद्वा शम्बूकजातिरपि किन्न प्रसूते मुक्ताफलं शुक्तिः। कर्णं दत्त्वा। किमिह कल कल इव श्रूयते पौराणाम्? पुरोऽवलोक्य। तावदेनामापतन्तीं चन्द्रसेनां पृच्छामि। सखि चन्द्रसेने! कोऽयं कोलाहलः? किं ब्रवीषि? चित्रवति! चत्वरे शूरसेनवीरसेनयोश्चरणायुधयोर्युद्धं प्रवर्त्तत इति। परमसम्भ्रमपरा भवन्ति पौरा इति। तर्हि वयमपि समागत्य पश्यामः। कथमुपक्रान्त एव ते क्रूर-धारचरणशस्त्रयोश्चरणायुधयोः कलहः। सशिरःकम्पम्।

तुण्डेन खण्डयति तूर्णमुपेत्य वेगात्
पादेन हन्ति परिहृत्य परप्रहारान्।
पार्श्वे परिभ्रमति पश्यति चावकाश-
मुन्नम्रचूडमुपसर्पति ताम्रचूडः॥

अयञ्च।

पश्चान्न याति न च याति पुरः प्रमादात्
पार्श्वं न याति चरणायुधसार्वभौमः।
वामेन केवलमसौ चरणेन शत्रो-
र्मौलौ निहत्य मुहुरुत्थितकण्ठनादः॥

अपि च।

अग्रे पश्चल्लवेश्वरामभिमुखं ग्रीवां प्रसार्य्यायतां
लालत्तारकताम्रलोचनपुटौ रोषाधिकौ कुक्कुटौ।
चूडाखण्डनतीक्ष्णशोभिततरं दुर्वारपक्षारवं
पर्य्यायेण ततोऽत्युति प्रहरतः पादैर्निबद्धक्षुरैः॥

तदनयोः परस्परातिशायिनोर्जयपराजयौ पौरमुखा-
देव जानीमः । तद्गन्तव्यमेवास्माभिरविलम्बितमिति । कति
चित्पदानि गत्वा सकौतुकम् । सफलमद्य जातञ्चक्षुः यदिदानीम्,

मन्दस्मितमधुरकुङ्कुमपत्त्रलेखं
माणिक्यकुण्डलमनोहरगण्डभागम् ।
मुक्ताकलापपरिचुम्बितकण्ठमूलं
मार्गे पुरःस्फुरति मन्मथभागधेयम् ॥

निर्वर्ण्य । कथमियमाकृतिरस्यान्नगर्यामितःपूर्वन्न दृष्ट-
चरी श्रुतचरी च । तथा हि ।

कर्णोत्पलाङ्कविसर्पिणी नयनयोः कान्तिर्वसन्तोत्सवं
लाक्षासम्भ्रमनिर्व्यपेक्षमधुरं लावण्यमेवाधरे ।
हारोऽस्याः स्मितचन्द्रिकैव कुचयोरङ्गप्रभा कञ्चुकी
तन्व्याः केवलमङ्गहारमधुना मन्ये परं भूषणम् ॥

साश्चर्यम् । कथमत्रैव साक्षाद्भगवती मातङ्गी मतङ्गकुल-
ललामभूता सङ्गीतजन्मभूमिः सकलकलाकलापप्रवीणा
वीणावती ?

वेणीवेल्लितबालकेन कदलश्रेणीमनोहारिणी
वीणा पर्वसु मीलितार्द्धनयनं व्यापारयन्ती नखान् ।
मुक्तावेष्टितकर्णपत्त्रवलयामुग्धस्मितालङ्कृता
सङ्गीतं वितनोति तत्परिसरे तालानुकारस्वनी ॥

तावदेनामायान्तीं कान्तिमतीं पृच्छामि । सखि कान्ति-
मति ! कैषा वीणावत्या सह वीणामुपगीयमाना सीमन्तिनी ?
किं ब्रवीषि ? "भाव ! भवानपि किन्न जानाति ? अस्मिन्नगरे



Digitized by Google

वसन्तयाजी नाम कश्चिद्विप्रो वर्त्तते । स कदाचित् पुत्रमवलोक्यास्मिन्नगरे सत्यव्रतचेते पुण्यकोटिच्छायायां भवता यष्टव्यमित्यब्रवीत् । सोऽपि नाहमिष्ट्वा भवता सह सुरनगरवेश्यावाटिकासु कलहमहापातकमनुभवितुमिच्छामि । केवलमस्यामेव नगर्य्यामेतासु वेश्यावाटिकासु पर्य्यटामीति यज्ञार्थं सम्पादितार्थजातमादाय सत्वरमेतामेव वेश्यावाटिकां संप्राप्त इति ।" साधु विप्रकुमार ! साधु ! सम्यङ् निश्चितार्थोऽसि । वारसुन्दरीमुद्दिश्य वषट्कारपूर्वकं द्रव्यत्यागमाचरतस्ते यज्ञफलं सिद्धमेव ।

यूनामनङ्गं यजतां विशाला शाला च लीलागृहचन्द्रशाला ।
गात्राणि पात्राणि विलासिनीनां, मध्यञ्च वेदी, भणितानि मन्त्राः ॥

ततस्ततः । किं ब्रवीषि ? "अथैषा तस्य धर्मपत्नी 'पतिव्रतानां पत्युरनुसरणमेव परमो धर्म इति' स्वयमप्येतां वेश्यावाटिकां प्रविश्य वसन्तकलिका नाम भूत्वा वेश्याधर्मेण वर्त्तत इति ।" सपरितोषम् तर्जनीमाघूर्णयन् । साधु बुद्धिमति ! साधु, सत्यं धर्मपत्न्येवासि । सद्य एव पत्युरनुसरणफलं प्राप्तासि । यच्छोत्रियवेतालविधीयमानस्नानोपवासादिविविधदुःखभाजनमात्मानमविधाय मनोरमान् भोगाननुभवन्तौ सुखेन वर्त्तसे । तावदेनामुपसर्पामि ।

सकौतुकमुपसर्प्पन् सविनयमुत्थाय । वीणावति ! किं ब्रवीषि ? "तिष्ठ तिष्ठ महाकुलीन ! तत्रैव स्थित्वा यदि कथय कथनीयम् । नाहमुत्सर्पणयोग्या दुष्कुलेति ।" सखीदक्किं ब्रवीषि ? ब्रह्मसूत्रमवलोक्य स्वगतम् । "रे महापातकिन् ! किमवाप्यस्मान

पिशुनयति?" प्रकाशम्। को नाम कुलदोषः स्त्रीरत्नस्य? स्त्रीरत्नं दुष्कुलादपि।

सखि वीणावति! वसन्तकलिकामुखमवलोक्य भूयोऽपि किं ब्रवीषि? "न केवलमेतावत्, प्रियसखी पुष्पिणी च;" इति परित्याज्या किं मधुपवृत्तीनाम्? इत्युपहृत्य। किम्? "अस्माकमप्युपालम्भः?" वसनपल्लवेन कुचकलसमाच्छाद्य सरभसमुत्तिष्ठन्तीं वसन्तकलिकामुद्दिश्य। तिष्ठ तिष्ठ तथैवास्तु। युष्मानुद्वेजयितुं किमस्मदागमनम्? निर्वर्ण्य सोल्लासम्।

नश्यद्वलित्रयनवीकृतरोमरेखं
वक्षोजभारवहनासहमध्यभागम्।
उच्छ्वासि नीविहननन्तव तन्वि! जीया-
दुत्थानमुन्नतनितम्बनिरुद्धवेगम्॥

पुनर्निर्वर्ण्य।

पादद्वयञ्च तव पल्लवनिर्विशेषं
वक्त्रञ्च वञ्चितमृगाङ्कमिदं त्वदीयम्।
कर्णान्तिलङ्घि नयनं कमलाभिरामं
त्रैलोक्यमोहनमिदन्तव रूपमेव॥

साचीकृतस्मितम्। कलत्राचारो वा कामचारो वा यत्किञ्चिदस्तु, त्वयाहं विहर्तुमिच्छामि। किं ब्रवीषि? "भवतु यः कश्चिदाचारः, महापुरुष! पुष्पिणीति जानन्नपि किमेवं ब्रवीषीति?" सवितर्कम्।

पण्यस्त्रीषु परस्त्रीषु पुष्पदोषो न विद्यते।

Digitized by Google

न तासु कुलदोषो वा, कुलस्त्रीणान्तु तावुभौ ॥

तत्प्रियाणीगमनं धर्म एव । किं ब्रवीषि ? "तत्रैव धर्मो, नास्माकं, गच्छ गच्छ, सर्वतः संचरन्ति राजपुरुषा इति ।" स्वगतम् । सुभाषिणि ! किमद्यापि ते धर्मानुरोधः ? प्रकाशम् । किमस्मान् राजापुरुषव्यपदेशेन भीषयसि ? यथेष्टं कथ्यताम् यदि रहस्यं, वयं साधयामः । वीणावति ! वसन्तकलिकामपवार्य्य । किं ब्रवीषि ? "सुविदग्धजनमूर्द्धन्य ! किमन्यत्कथ्यते रहस्यं, भवन्तमेषा बद्धाञ्जलिर्विज्ञापयति, श्वः परश्वो वा मयि स्नाता-यामागन्तव्यमिति ।" सानन्दम् । यदि प्राणवन्तो वयमन-ङ्गव्यथां निस्तीर्य्य, सत्यमागच्छामः । सवितर्कम् ।

कामुककालभुजङ्गीं कन्दर्पोद्यानसारङ्गीम् ।
कथमिह कनकनिभाङ्गीमेनामङ्गीकरोमि तन्वङ्गीम् ॥

वीथीमवतीर्य्य परिक्रामन् पुरोऽवलोक्य सकौतुकम् । विकट-पदविन्याससुखरलोहनूपुरः कर्णलम्बमानधत्तूरकुसुमः कक्ष-निहितभुजङ्गपेटिकः करकलितकालायसवलयजातो विवि-धौषधरसकषायगन्धिकलेवरः साटोपरचितविविधदेशभाषा-मुखरः कश्चिदाहितुण्डिक इतएवाभिवर्त्तते । साश्चर्य्यम् ।

करेण बद्धौषधकङ्कणेन कृताञ्जलिः सन् गुरवे नरेन्द्रः ।
विभावयन्नात्मनि वैनतेयं भुजङ्गमाकर्षति पेटिकायाः ॥

सभयकौतुकम् ।

फूत्कारमुद्गिरति भूतलमेव हन्ति
मूर्द्ध्ना मुकुन्दपदपङ्कजमुद्रितेन ।

Digitized by Google

भीमे हृतः पुनरदर्शितपूर्वकायः।
क्रोधेन पश्यति नरेन्द्रमहो भुजङ्गः॥

भुजङ्गन्निर्वर्ण्य।

अयि भुजग! महेशो भूषितस्त्वत्कुलीनै-
रपि वहसि धरित्रीमात्मनो मौलिभागे।
किमपरमिह लक्ष्मीकामिनस्त्वं हि शौरेः
सुरतकलहलीलासाक्षिणी केलिशय्या॥

तावदेनं मोचयामि। भो भो माहेश्वर भुजङ्गोपजीविन्!

कण्ठे हारो मणिविलसितः कङ्कणं च प्रकोष्ठे
मञ्जीरश्रीश्चरणकमले मालिका मौलिभागे।
शम्भोरित्थं सकलमपि सङ्कृषणं पन्नगोऽयं
भूयोऽप्यासीत् त्रिपुरविजये प्रस्तुते चापमौर्वी॥

तदेवं युष्मत्स्वामिनः परिकरभूतस्ततो मुच्यतामयं महानागः। यत्किञ्चित्पारितोषिकन्ते दास्यामि। आकाशे लक्ष्यं बध्वा। किं ब्रूथ? "न मोचनीयोऽयमस्मद्रोमावलीकान्ति-चौरो भुजङ्ग इति।" सोत्प्रासम्। स्वभावः खलु भवतीनां भुजङ्गनिरोधः, तद्बध्यतामयञ्चौरः। शैशवेऽपि साधारणस्त्रीणामसाधारणी खलु व्यवहारवैदग्धी। पदान्तरङ्गत्वा। कथम-त्रैव कन्दुकविहारमातनोति तरलहारा हारावली? एषा खलु।

बध्नाति केशनिचयं स्वयमाश्ववन्धं
स्थाने निवेशयति भूषणमन्तरन्तः।

काश्मीरपङ्कतिलकञ्च करोति भाले
चिवाण्ययापि मणिकन्दुकताडनानि ॥
सोमुखिकासु कुरुते भुजगस्य लक्ष्मीं
चक्राकृतिं भजति मण्डनकल्पनेव ।
रेखाकृतिं व्रजति संप्रति वीथिकासु
चित्राणि हन्त मणिकन्दुकचेष्टितानि ॥

तावदनया संलपामि अनवरतम्। हारावलि! मुखकमल-माघ्रातुमुत्पतन्तङ्कन्दुकम् किन्ताडयसि? किं ब्रवीषि? "भवादृशोचितं वदनकमलमाघ्रातुं कोऽसौ पतित इति?" साधु हारावलि! साधु! चिरं निर्वर्ण्य।

संवीक्ष्य कन्दुकविहारसमाकुलाया
धन्यान्यमूनि मणिकुण्डलताण्डवानि।
तानि स्मरामि तरलाक्षि! निरङ्कुशानि
भोग्यानि ते सुकृतिभिः पुरुषायितानि ॥

किं ब्रवीषि? "नायमवसरस्ते नर्म्मालापस्य, गच्छ गच्छ कन्दुकविहारस्य किमन्तरायोऽसीति?" तर्हि गमिष्यामि। पुरोऽवलोक्य सपरिहासम्।

कक्षे वहन् किमपि पुस्तकमात्तदण्डः
प्रत्यङ्गुलीविवरभासुरदर्भजालः।
कोऽप्येष जीर्णवसनः कुटिलोर्द्ध्वपुण्ड्रो
वेश्यागृहं विशति निस्त्रपमग्रजन्मा ॥

सपरिहासम्। समस्तपौरजनस्वस्तिवाचको दाक्षिणात्यो देव-राजभट्टोऽयमुत्तमदानार्थं परिभ्रमति। सखेदम्। अय-

Digitized by Google

मित्यं संचिनोति, अस्य भार्य्या तु सर्वमन्यस्य दृत्वा व्यभिचरति।
श्रुतिमभिनीय।

हर्म्याग्रेष्वनुकालघट्टितो महाबा-
माक्रन्दन्निव दरिताश्च सन्धिबन्धान्।
निर्व्वलः कथमपि निर्गतो गवाक्षा-
द्वीथीषु प्रसरति पौरघोष एषः॥

परितोऽवलोक्य। आः कष्टम्।

पलायन्ते केचित्पथि शिथिलधम्मिल्लवसनाः
प्रलीयन्ते केचिद्भवनवलभीभित्तिनिकटे।
पतन्त्यन्ये भूमौ भयपरवशैरङ्घ्रिभिरमी
मनः कम्पं धत्ते मम च तव कश्चिद्व्यतिकरः॥

किन्निमित्तमिति तत्त्वतो न कश्चिज्जानाति। केवलं सर्वे धावन्तमनुधावन्ति। ससम्भ्रमम् करसंज्ञया कलकलन्निवार्य्य तोत्रमादाय त्वरितमाधावन्नाधोरणः क्रुद्धः किं ब्रवीति? "रे रे पौराः पलायध्वं गन्धद्विपो गन्धद्विप इति।" सभयकौतुकमग्रतोऽवलोक्य।

मन्दं प्रयाति मदविह्वलमीक्षमाणो
मार्गे परिभ्रमति याति निवृत्य भूयः।
वेगेन धावति विलोक्य जनं पुरस्ता-
द्द्रावन् परिभ्रमति गर्जति गन्धहस्ती॥

आकाशे सभयकौतुकम् अग्रतोऽवलोक्य लक्ष्यं बध्वा। मदनमञ्जरि! किं ब्रवीषि? "सोऽयं कुञ्जरापसदः किमस्मानुपधावतीति।" सोत्प्रासम्।

Digitized by Google

कुचपणनयविलासैः कुम्भयोर्वां वहन्तीं
विरचितकरभङ्गामूषया मन्थरेण।
मदपरवशमस्मिन्नन्तरे सञ्चरन्ती-
मनुसरति गजस्त्वामात्मनो हस्तिनीति ॥

सोद्वेगम् ।

सन्निगृह्य चरणेषु नोदनात्ताड़यन् भुवि पलायितपौरान् ।
कन्धराकषणकम्पितसौधो मत्समीपमुपसर्पति हस्ती ॥

ततः स्थातुमयुक्तमस्माकम् ।

कुपितं च महीपालं कुञ्जरं च मदालसम् ।
अतिदूरे परित्याज्यमामनन्ति मनीषिणः ॥

साश्चर्यम् । अस्य निरङ्कुशविहारिणः पुरतः स्थित्वा किमपि भावयन्नाधोरणवृद्धः किं ब्रवीति ? "रे रे निषादिनः ! सिंहपटश्रृङ्खलसिंहमुद्रया तावदेनं स्थिरीकरोमि, निगृहीतमागत्य दन्तयोः सिंहपटं सङ्कलय्य शृङ्खलया चरणयोर्निबध्य च निःशङ्कमारुह्य कारागृहं नीयतामयं दुष्ट-गज इति" साधु यान्त्रिक! साधु ।

कुम्भेन कुचसौभाग्यचोरमेनं मृगीदृशाम् ।
युक्तं कारागृहमेतुं कृत्वा निर्गलबन्धनम् ॥

कतिचित्पदानि गत्वा स्तुतिमभिनीय, सादरं शिरस्यञ्जलिं घटयन् ।

दृप्यद्दानवदोर्विवर्त्तितमहामन्थानशैलस्खली-
घोराघातविघूर्णदर्णवपयःकल्लोलकोलाहलः ।

श्रीमत्तुङ्गरशैलशेखरमणेर्देवस्य काञ्चीपते-
र्मन्दं मन्दमुदञ्चितोऽयमधुना मध्याह्नशङ्खारवः॥

सरभसमुत्थाय चरणमूर्द्धमवलोक्य। कथमयमवलम्बित-मम्बरतलमध्यवर्त्ती सम्वृत्तो विकर्त्तनरथः? अद्य खलु।

विदलयति शिरो मे भानुरुद्दण्डमयूखै-
र्दहति पदमधस्तान्मेदिनीपांशुजालैः।
दयमिदमतिशीतं दृश्यते दुर्निवारं
मनसि यदयमुच्चैर्जृम्भते मन्मथाग्निः॥

पुरोऽवलोक्य। महानयमुत्सवो लोचनयुगलस्य। यदि-दानीम्,

वलान्नूपुरमञ्जुनादमुखरं निर्गत्य लीलागृहा-
दुष्यन्दिकुरङ्गनाभितिलकैरुल्लासिफालस्थलाः।
क्रीडाकृत्तनवातपत्रमतुलं चेलाञ्चलैरञ्चितै-
र्मन्दं मन्दमिमाः प्रयान्ति सुदृशो मध्याह्नसेवोत्सुकाः॥

सनिर्वेदम्।

अम्भोजबन्धुरिति भानुमिमाञ्च भूमिं
सर्वंसहेति कथयन्ति मृषैव लोकाः।
वक्त्राम्बुजं ग्लपयति प्रथमो वधूना-
मासां परा न सहते चरणार्पणञ्च॥

कथमस्मत्प्राणापहारिणी हारिणी? किं ब्रवीषि? "धूर्त्त! त्वमातपे तावद्गच्छ, विश्राम्यतां गृह एवेति।" सोत्प्रासम्। त्वदर्थमनुभूतकामानलस्य मे कोऽयमातपो नाम?। श्रुतिमभिनीय।

Digitized by Google

व्याकुर्वन्नुपाध्याय इव श्रूयते रेवती चन्द्रशालायां, तदयुक्तमु- पाध्यायमतिक्रम्य गन्तुम्। एतमुपसंगृह्य यावदावर्त्तते वासरो गच्छामि। एकहस्तमुत्तंसयन्। उपाध्याय! नमस्ते। किं ब्र- वीषि? "अनङ्गविद्यापारङ्गतो भूयाः, चणमिहास्यतां। विहितो भवान् समीचीन एवावसर इति।" यदाज्ञापयन्ति गुरव इत्युपविश्य कोऽयमवसरो व्याख्यानस्य? व्याख्याताः किं जाति- भेदाः, व्याख्याता किमर्द्धचन्द्रादिनैचित्री? किं विन्दुविन्दुमाल- योरन्तरमालोचितं? किमुक्तान्युत्तानकरणादीनि? दत्ता किं चीरनीरयोस्तिलतण्डुलयोर्विवेके दृष्टिः? दृष्टं किमष्टविधमौ- परिष्टकं? किं ब्रवीषि? "शेखरः खलु भवान् शृङ्गारविद्यायाः। तात! व्यतीतः खल्ववसरस्तेषां, पटचूर्णीकृतं तत्सर्वमेतैर्द्विज- मूर्द्धन्यैः। इदानीं सकलसुखसाक्षात्कारचमलक्ष्मीशप्रभृतिभि- रिदमेव सेव्यते" इत्यस्यैव सर्वातिशायित्वात्तन्मोक्षे परमं सुखं निर्वाणं हि महत्सुखमित्यादिभिरभिनवयौवनमदललितका- मिनीनितम्बविम्बसुदुकूलमोचभाविसौख्यमेवाभिधीयत इत्य- स्यैव स्वसंवेद्यपरमानन्दस्वरूपसुरतसौख्यस्य मोक्षसुखत्वं प्रतिपाद्य तदनङ्गोपासनमन्तरेण न घटत इति वादाः क्रियन्त इति। सानन्दं शिरः कम्पयन्।

शतमप्यस्तु कर्णानां सहस्रं वास्तु चेतसाम्।
तथापि त्वदुपन्यासं कः पुमानवधारयेत्॥

तर्हि शान्तश्चायमातपः, साधयामि। मन्मथेन वसन्तसेना भवन्तं विज्ञापयति "भवद्भिरप्युपागन्तव्यं वासन्तिकारथोत्सवा- येति" नाटितकेन सौधादवतीर्य। परिक्रम्य पुरोऽवलोक्य।

Digitized by Google

कक्षावबद्धकशोदरेण वपुषा खड्गं मुहुः कम्पय-
ञ्छिद्रामेष गतागतैः प्रकटयन् शस्त्रग्रहे भूयसीम्।
व्याकुर्वन्ति च वीरवादमधिकं विस्तीर्णवक्षःस्थलो
वीरः कश्चिदलङ्करोति विपणिं वीरैरनेकैर्वृतः॥

ससम्भ्रमम् कलकलानुसारी पृष्ठतोऽवलोक्य। कथमत्रापि।

बलान्मुकुन्दजय जयेति वदद्भिरुच्चैः
पौरैर्वृतो विजयडिण्डिमचण्डनादः।
मौहूर्त्तिकेन निवृतस्मरणात्कथञ्चित्
खड्गी समालपति कश्चिदुदारवेषः॥

कथमेतज्जानीमः। तावदेनं पृच्छामः। सखे रङ्गनाथ! किन्निमित्तमेतयोर्व्यतिकरः? किं ब्रवीषि? "किमन्यनिमित्तोऽयं गणिकामन्तरेणेति।" सबहुमानम्। तर्हि युक्तमेव सा खल्वेषा भवता दृष्टस्य प्रातिवेशिकस्य कुबेरनाम्नो वणिक्श्रेष्ठस्य कनिष्ठदारा तारावली वशीकृता। किं ब्रवीषि? "विदग्धः खलु भवान् वशीकरणविद्यासु, त्वदुक्तोपायेन वशीकृतैव, तथापि सा किं करोतु वराकी, गुरवः खलु निगडं कुलस्त्रीणाम्। तथा हि।

कार्य्येणापि विडम्बनं परगृहे श्वश्रूर्न सम्मन्यते
शङ्कामारचयन्ति यूनि भवनं प्राप्ते मिथो यातरः।
वीथीनिर्गमनेऽपि तर्जयति च क्रुद्धा ननान्दा पुनः
कष्टं हन्त मृगीदृशां पतिगृहं प्रायेण कारागृहम्॥

किन्नाम दुष्करं दैवस्य। सा कदाचिदभिनवजलदसम्भारगम्भीरे सायं परिभवति भुवनमन्धकारे मयि च भक्त्या गृहीत-

Digitized by Google

ताम्बूले पर्य्यङ्कमारोहति सा वरारोहा हि कच्चायां वसन्ती पद्यमिदं पठितवती।

नाथो मे विपणिं गतो न गणयत्येषा सपत्नी च मां
त्यक्त्वा मामाह पुष्पिणीति गुरवः प्रागात्गृहाभ्यन्तरम्।
शय्यामात्रसहायिनीं परिजनः श्रान्तो न मां सेवते
स्वामिन्नागमनावनीयरजनीं लक्ष्मीपते! रक्ष माम्॥

इति श्रुत्वा लब्धावकाशा मामेव प्रार्थयते, चिरकालप्रार्थिता वरवर्णिनी इत्युत्तरीयमुत्सृज्य समुल्लङ्घितप्राकारे मयि विशति गृहाभ्यन्तरम्।

हस्तेनाकुलकङ्कणेन ललितं केशेषु मां गृह्णती
शय्यायां विनिपात्य रे शठ! चिराल्लब्धोऽसि दैवान्मया।
त्वामद्यैव निहन्मि धूर्त्त! चिकुरं मुञ्चेति संलापिनी-
चेष्टाभिश्चलकुण्डलाभिरपरां क्रीडां वितेने वधूः॥
पर्य्यायेण पराक्रमं विदधती पर्य्याकुलैः कुन्तलैः
श्रान्ता वक्षसि मालिकेव पतिता सम्मीलितार्द्धेक्षणाः।
मा मा मुञ्च म्रतास्मि मर्द्दय समाश्लिष्येति दीनाक्षरं
जल्पन्ती श्रमाकुला रसवती भुक्ता मया कामिनी।"

सबहुमानं तर्जनीमाघूर्णयन्। सखे! साधु शृङ्गारशेखरस्य मितमसि, शृणु तावदेतामपि कथां, कति वा न सन्ति भुवि कामिनीरूपाणि रत्नानि। कदाचिदहं रङ्गराजाभिवन्दनाय रङ्गं नगरीकृतवान् तत्र कदाचिदम्बरतलविहरदमरपुरयुवतिकरकमलगलितमन्दाकिनीकरकारविन्दसन्दोहकातर--मधुकरनिकरावलोकिते चीणतेजसि चरमगिरिशिखरमव-

तरति बन्धूकबन्धुरे कमलबन्धौ, मन्दमन्दमपहतसुवतिमाने मदनकृतवङ्कमाने वहमाने मलयगिरिपवमाने, पण्यवीथिकायां जातिचम्पकादिपुष्पाणि नवकेतकीदलद्राघीयांसि ताम्बूलीदलानि च समादाय चमत्कारिभिरुदारवेषैरशेषभाषागीतिनीतिचतुरैः साट्टहासमन्योऽन्यमाकलितकरतलास्फालनैः पीठमर्दविटचेटविदूषकप्रायैः कतिपयैः सवयोभिः सहायमपि चरति वेश्यावीथ्याम्।

सौधस्थले चरन्ती चरणसमालोलचारुमञ्जीरा।
कापि कमनीयमूर्त्तिः कनकशलाकेव कामिनी दृष्टा॥

सपुलकोत्कम्पम्। तत्स्मरणमद्यापि मां व्यामोहयति।

तिष्ठन्तु सर्वेऽपि तदावयोरुत्कम्पकुङ्कुमखालोकनबद्धलक्ष्याः।
मुहूर्त्तमन्तःकलहायमानाः परस्परं सम्मीलिताः कटाक्षाः॥

वयस्य! किं तवापि गोप्यमस्ति? ततः कथङ्कथञ्चिन्निवासमागत्य ताम्बूलादपि विषतरुपल्लवानि बहु मानयन्, आहारादपि हालाहलमात्मानुरूपमाकलयन्, निष्ठरप्राणभाराक्रान्ततया शरीरमपि धारयितुमक्षमः, प्रतिक्षणमतिविह्वलः-कलामात्रमपि कल्पकोटिवदतिवाहयितुम्, अभिनिवेशेन तेषु तेषु मनोहरेषु दीर्घिकास्थानेषु धारावृष्टिर्गतघन इव पिशाचाविष्ट इव तिरश्चामपि दयनीयावस्थः परिभ्रमन्,

वीणावादेन गोष्ठिकासु विरमयन् वाणीमधुस्यन्दिनीं
क्रीडासौधगतानि तानि कलयन् दृष्ट्वा च हंसीकुलम्।
कोकद्वन्द्वविलोकनेन कुचयोर्युग्मञ्च तस्याः स्मरन्
न क्वापि स्थितिमन्वभूवमिति तच्चिन्ताकुलः सर्वदा॥



Digitized by Google

एवमतिक्रामति काले, कदाचित् किल विरहिजनमीन-ग्रहणार्थमुन्मृष्टकनकसूत्रानुकारि संहरति धीवर इव सवि-तरि किरणजालमपरपक्षपाकर इव दिने दिने क्षीयमाणो विरहवेदनानिवेदनोचितं कमपि जनमनालोकयन्नपारशो-कसागरनिपतितो निस्तारमपश्यन्, तस्या गूढपातकिन्या वा-र्त्ताश्रवणोपायमप्यजानन् मरणमन्तरेण का गतिरस्माकमिति निश्चित्य हृदयगतप्रेयसीस्तनभरनिःसह इव भङ्गुरमात्मानं कथङ्कथमपि धारयन्, विरहविसंष्ठुलैः पदैर्नेदीयसि निर्जने जीर्णमातृगृहे कर्पूरलिकुचपार्श्वरवतस्थुषम् । अत्रान्तरे कापि कापालिकलिङ्गधारिणी "कः कोऽत्र देवीगृहे ?" इति ससम्भ्रममधिक्षिपन्ती प्रविश्य देव्या वामभागे करतलगलित-कर्पूरलिकुचफलमवनितल-पतितमज्ञातकेशावसनमतिकश्मले महति वाष्पपूरे प्लवमानमवलोक्य तां दारुणामवस्थां स्वयम-प्यनुभवन्तीव कराभ्यामुत्थाप्यमानैस्तैस्तैरुपायैराश्वास्य, "कुतः को भवान्? किमर्थमेतादृशीमवस्थामनुभवसीति" मामप्राक्षीत् । ततः कथङ्कथमपि निरुद्ध्य कण्ठरोधि वाष्पम्, "अम्ब ! निष्-कारणवत्सले ! तदिदं परीवाहः खलु कूलभेदिनो महातटा-कस्य, यदन्यस्मै निजदुःखनिवेदनं श्रूयतान्तावत्, सोऽहं काञ्चीपुरनिवासी गर्भैश्वर्यदुर्ललितः पित्रा सह कलहायमानो वात्सल्येन पदपतितां रुदन्तीं मातरमप्यवधूय श्रीरङ्ग-राजदर्शनार्थमिमान्नगरीं प्रविष्टः । कदाचिदस्ताचलशिखर-चुम्बिनि रविबिम्बे विम्बलिविष, सोऽपि कैश्चित् सवयोभिः सह वेश्यावीथिकामापतन्नहमेव कस्याश्चिद्गूढपातकिन्याः कटाक्ष-

Digitized by Google

वागुरिकावलयपतितः फलमेतादृशमनुभवामि, नाद्यापि निस्तारस्य पश्यामीति" मयि वदति सा कार्पटिका किमपि रत्नमादाय "सा महापातकिनी मन्मुखेन भवन्तं विज्ञापयति, 'नेदं शिलाशकलमिति मन्तव्यं, किन्तु युष्मद्गुणगणक्रीतमस्मचेतः इति' अर्पितवती।" तदहमारचिताञ्जलिः कराभ्यामादाय रागपेशलं प्रेयसीहृदयमिव मदाकारगर्भं सुचिरमालोकयन् आनन्दविस्फारितेन चक्षुषा तामवोचम्। "अम्ब! किमित्यपदीयते? महामूल्यमेतद्रत्नं अस्तु वा सन्दिष्टं, निरङ्कुशः खलु महतामुदारगुणः। तथा हि,

ताम्बूलं वा, दुकूलं वा कुसुमं वानुलेपनम्।
भुक्तपूर्वमिदं सर्वं सन्दिशन्ति मृगीदृशः॥

जानाति खलु सम्यगस्य दासजनस्य सेवाचातुर्य्यं, कथय तावत् कथं वर्त्तते प्रेयसीति? मयि वदति, सावादीत्। "किमुच्यते तात! यदा खलु सा भवन्तं दृष्टवती, ततः प्रभृति,

न क्रीडासु कुतूहलं वितनुते, नालङ्कृतौ सादरा,
नाहारेऽपि च सस्पृहा, न लपयत्यालापलोलां सखीम्।
बाला केवलमङ्कुरैरनुकलत्क्षामैर्विविक्तस्थले
ध्यायन्ती किल किञ्चिदन्तरधुना निस्पन्दमास्ते सदा॥

किञ्च।

शोकाग्निदग्धे हृदि वल्लभो मे वसन् किमासीत्? इति दुःखितायाः।
विलोचनैः स्यन्दिभिरश्रुपूर्णैर्विश्वग्नदीमातृकतामयासीत्॥

न केवलमेतस्याः तापं ब्रवीमि।

सन्तापसुटितोत्थितोत्पलतटाम्भःसम्पातफेनैरन्वितं
भस्मीभूतनवप्रवालशयनं पर्य्याकुलैरङ्गकैः।
निश्वासग्लपितप्रसूनकलिकानिर्विसृष्टस्रङ्गीकुलं
तस्यास्तापममन्दरं कथयते तन्व्या लतामण्डपम्॥

किञ्चैषा त्वय्यनागतेऽपि सम्पूर्णकामेव। तथा हि,

गाढ़े सत्यपि चुम्बने, न च पुनः क्लिष्टा कपोलस्थली,
न क्वापि क्षतिरीक्ष्यते बकुतरं दष्टेऽपि दन्तच्छदे।
आश्लेषेऽपि न पत्रभङ्गरचना वक्षोजयोर्हीयते
भुंक्ते वञ्चितबन्धुवर्गमिति सा स्वप्नोपभोगोत्सवम्॥

एवं क्रमेण दिवसेषु कतिपयेषु गच्छत्सु, कदाचिदहं भिक्षार्थमटन्ती सायन्तनसमये मलयमरुदुद्भूतमाधवीमकरन्दस्यन्दिन्यङ्गनकदलीमण्डपे विरहविसंष्ठुलैरङ्गैरनङ्गवेदनारसमनुभावयन्तीव कामपि कदलीमालिङ्ग्य स्थितां दृष्ट्वा झटिति सञ्जातकरुणा गृहस्य विजनताञ्च विज्ञाय ताम्पृष्टवती। "जानामि खलु सर्वदा मान्ते विस्रम्भपात्रमिति। तत् किं मुग्धे! ममापि गोपयन्ती हृदयमेवमुत्ताम्यसि?

क्षामं गात्रम्, अतीवपाण्डु वदनं, क्लिष्टा कपोलस्थली,
कोऽसौ चेतसि वर्त्तते तव युवा लोकैकमान्याकृतिः?
त्यक्त्वा किञ्चिदपत्रपा कथय मे खिन्नासि किं त्वं वृथा
चोरः पञ्चशरो यदि त्वमबला, वक्ष्यामि नातः परम्॥

इति सा तु कथङ्कथञ्चिद्वदनमुन्नमय्य शुकतुण्डकुटिलकोटिभिर्नखाग्रैरमनकलुषांश्चिरहाग्निधूमशकलान् बाष्पबिन्दूनादाय विक्षिपन्ती मामुक्तवती। "मात! त्वयापि किन्नाम

गोप्यमस्ति ? कदाचिदहं नगरावलोकनकौतूहलेन सौधस्थले चरन्ती केनापि कमनीयवेशेण विलासिना कनकमृगेण जानकीव हृतचित्तास्मि। नाहं नाम जानामि, नापि कुल देशौ, अपि तु एतावदेव जानामि।

नवयौवनकुञ्जरस्य मन्ये मदलेखेव मदालसस्य यूनः।
मुखचन्द्रमसः कलङ्करेखा भवति श्मश्रुपरम्परा कपोले॥

न्यहपि चास्य भावोऽपि, सोऽयमस्मिन्नगर एव स्यात्। येन हि,

परिवृत्य मुहुर्विलोकयन् मां प्रणयस्पन्दिभिरुत्सुकैरपाङ्गैः।
चरणैरगमत् कथं कथञ्चिद्विरहैर्विस्मितमार्गसन्निवेशैः॥

यदि शक्नोषि तमन्विष्यानेतुं, मम प्राणास्तिष्ठन्तीति" वदन्त्येवं पादावग्रहीत्। सा च "कामिनीनां सन्देशमन्तरेण कामिनो न विश्वसन्ति" इत्युक्त्वा "सकलपुरुषमौलिरत्नाय तस्मै किमन्यत् सन्देष्टव्यम्" इत्युत्तमाङ्गान्मौलिरत्नमादाय "तमेनमेवं ब्रूहि" इति दत्त्वा मां गाहिणोत्। तदहं दिष्ट्या भवन्तमिहैवोपलब्धवती। सा चेत् इयता कालेन नूनमुन्मादिनी स्यात् ? तद्यथा तद्गुरवो न जानन्ति, तथैव तत्प्राणान् प्रतिष्ठापयितुं भवानेव प्रमाणमिति।" तदहमाकर्ण्य क्षणं विचार्य्य कर्णौ ताम् "एवमेवम्" इत्युक्त्वा प्राहिणवम्। वयस्य ! किं नाम दुष्करं मायायाः? तज्जनकेन लक्षेश्वरेण विरहवेदनावशेनोन्मादिनीं तामविज्ञाय "महाभूतग्रहग्रस्ता" इति पर्य्याकुलेन "मत्कन्याश्रितं महाभू यो निवारयिष्यति, तस्मै धनाढ्यं प्रयच्छामि" इति प्रद विविधमन्त्रतन्त्रेषु सा न

किञ्चिदूचे, केवलं रोषदहनगर्भया दृशा दहन्तीव तानैक्षिष्ट।

अनन्तरन्तु।

मय्यागत्य गृहीतमाणिक्यपदे वक्षःस्थले गाढयो-
र्विश्रब्धं च तया प्रहृत्य विहरत्याक्रुष्टके शान्तया।
तस्यास्तत् स्मितहासरोषपुलकखेदादिकं केवलं
मत्वा तद्ग्रहविक्रियामपि जनैर्मोहात्समभ्यीकृतम्॥

किञ्च।

"यन्त्रं संहरयामि, यामि भगवन्! यद्योऽहमज्ञानतो
बालामद्य समागतोऽस्मि सकृदप्येका ममैषा निधिः।
शून्ये मातृगृहे प्रयच्छतु बलिं कन्येति" कामग्रह-
ग्रस्ता कृत्रिममन्त्रवादिनि मयि प्रोवाच सा सुन्दरी॥

तदाहम् मृषा कल्पितयन्त्रजालको, "गच्छ गच्छ किं तव यक्षाधमेति" तं मिथ्यायक्षं निवार्य्य "विविधभोगदक्षा खलु यक्ष-जातिः, तस्मै नमस्कृत्यालङ्कृता सकलानि भोग्यवस्तूनि समा-दायैकाकिनी बलिं दत्त्वा यक्षाय शून्ये मातृगृहे समायातु। तावता सर्वं समाहितं भवति" इत्युक्त्वा प्रीतेन लक्ष्मेश्वरेण दत्तं धनमादाय सन्ध्यासमये मातृगृहं प्रविश्य क्वचित्तिरोहितो-ऽस्मि। सपुलकोद्गिदम्। किम् ब्रवीषि? "ततस्तत इति" ततो वयस्य! किमन्यत्कथ्यते? फलितं शृणु। सापि तथैव मातृगृहं प्रविश्य, वलितकङ्कणेन करेण कण्ठे मां सलीलं गृहीतवती।

तन्मयः किमयं? बाला मन्मयी? किमुभावपि?
किमानन्दमयो वेति? न विज्ञातं तया मया॥

अतिचिरकालप्रार्थितम् अनियतकथनीयमात्मसंवेद्यम्।
सुरतसुखमन्वभूतं विस्मृतसकलान्यवेदनः सुतनोः॥

तत एवं ब्रवीमि परदारसम्भोगपुलकयोरुचितमावयोः सख्यमिति। किं ब्रवीषि? "साधु मन्तकुशल साधु! कनिष्ठाङ्गुली भवान् प्रतिष्ठावान् पटुतरमन्मथशास्त्र।" वयस्य! परयोषितस्तु मदनज्वरान्निर्वापयन्त्यो भूयोऽपि संधुक्षयन्ति।

सद्यो रागिणि सूचयन्ति हृदयं सापत्रपैर्वीक्षितैः
सङ्केतस्य न शक्नुवन्ति मनसा सङ्कल्पमाना अपि।
शङ्कात्सङ्गममभ्युपेत्य गमनं संप्रार्थयन्ति त्वरात्-
साशङ्कास्खलिते द्वयोऽपि सहसा मुक्तोपभोगोत्सवाः॥

इति। "वयस्य! तत्तथैव,

दिगन्तान् पश्यन्ती दिशति न मुखे चक्षुरभितं,
न विश्रब्धं किञ्चित् कथयति, न वाकर्णयति च।
रतारम्भे भूयो जिगमिषति, साशापि सुरते,
तथाप्येषा भावैस्त्वरयति चेतः परवधूः॥"

तदेवमङ्गावशेषितमदनमनोरथस्यापि सुङ्गसुङ्गकलङ्कितकङ्कलानुरागस्य परयुवतिसम्भोगसौख्यस्य षोडशीमपि कलां सुरतान्तराणि न स्पृशन्ति। किं ब्रवीषि? "एतयोर्वीरवरयोर्दन्द्वयुद्धविलोकनार्थं गच्छामीति।" तर्हि गच्छ। सर्वदा न विस्मरणीयोऽयञ्जनः। ससम्भ्रमकौतुकम्।

सङ्गतावपि परस्परमेतौ दूर एव भवतोद्धत-खड्गौ।
मण्डलानि चरतः श्रमखिन्नौ मर्मणि प्रहरतो विहरन्तौ॥

Digitized by Google

किमस्माकमेतेन मलयकुच्छूतां मन्दरपथोपवर्णनेन ? विशिखान्तरं प्रविश्य । महानयं मल्लसंरम्भः । तथा हि ।

शिक्षा भूमिरजो[illegible] परिदधत्कक्षां भुजे कल्पयन्
आस्फोटं द्विगुण[illegible]यन्नग्रे गरिष्ठां गदाम् ।
मूर्ध्ना तत्क्षणमु[illegible]शां विभ्रच्च तन्वीं शिखां
मल्लः कश्चन मांसलो [illegible]ते युद्धाय बद्धोत्सवः ॥

दक्षिणतोऽवलोक्य । [illegible]म् । अयमेव भवेत्तस्य परिपन्थी । यदिदानीम् ।

द्विगुणितभुजा[illegible]ड़ारवैर्दलयन्नभः
करतलमहीपृष्ठा[illegible]तनिष्ठुरगर्जितः ।
सुदृढमवनीं स्पृष्ट्वा [illegible] विधाय पदाहत-
क्षुभितवसुधो रङ्ग [illegible]ल्लत मल्लराट् ॥

सकौतुकम् । कथमेतौ निर[illegible] एव ।

पादेनाक्रम्य पादं भुजवलितभुजौ तस्थिवांसौ स्थिरांशौ
भ्राम्यन्तौ भ्रामयन्तौ विधृतपरिकरौ पातयन्तौ पतन्तौ ।
भूमेरुत्थाय भूमौ रणमिह कुरुतो मुष्टिमादाय मुष्ट्या
गर्जन्तौ निश्वसन्तौ घनतरहतिभिर्भिन्नगल्लौ च मल्लौ ॥

वामतोऽवलोक्य । कथमुत्तरोत्तराण्याश्चर्याणि ? यदिदानीम् ।

केलिकम्पितविषाणचामराः किङ्किणीमुखरपीनकन्धराः ।
वक्रभासुरवराटमालिका नृत्यमत्र रचयन्ति पुङ्गवाः ॥

घोरो नास्ति भुजङ्गमादपि जनैः सोऽयं समं वर्त्तते
वन्यास्तेऽपि गजादयो विदधते वार्त्तानुरूपां क्रियाम् ।

Digitized by Google

वीणा काष्ठमयी च वक्ति मधुरं वाणीं मनोहारिणीं
पाषाणाश्च फलन्ति काङ्क्षितमहो किं वा न साध्यान्तरैः ॥

वीथ्यन्तरमवलोक्य। महानत्र समरसंरम्भः। कम्पितविषमवेल्लितविकटतिरश्चीनविषाणभूषायितविविधल्लोहवलयखलखलत्कारमुखरमुखानां अतिनिभिन्नखुरोत्खातभूतलानाम् अनवरतप्रहरणपरिणतकिणकठिनकण्डूलमस्तकानाम् असोढपरबलमधःशीर्षाणाम् अगाधरोषाणामेषां मेषाणाम्। तथा हि। पश्चात्परिवृत्यावलोक्य। सकलसार्वभौमपदमनुभवति चिराय शृङ्गारः। यदिदानीम्।

दोर्भ्यां चन्दनधूसरेण ललितान् धुन्वन्ति चित्राङ्कुरां
पश्यन् तत्क्षणजायमानपुलकः पार्श्वे मुहुः प्रेयसीम्।
उष्णीषप्रतिबिम्बितैश्च कुसुमैरुद्वासिधम्मिल्लवान्
उद्गायन्नुपयाति कोऽपि विभ्रमामुल्लोलवेषो युवा ॥

किञ्च।

कलुषितकपोलपाली कस्तूर्या काप्युपैति नेपाली।

सोत्कण्ठम्।

कस्येयमद्य पाणीं सास्यति पुलकैरपालनीपालीम् ॥

तावदेनामुपसर्पामि। इत्युपसर्प्य सलीलम्।

तरुणि! तव कर्णपत्रं शासनपत्रं मनोभुवः शुभ्रम्।
कर्णप्रसूनमुखरान् कलये तल्लेखवाचकान् भ्रमरान् ॥

सलीलं हस्ते गृहीत्वा कराङ्गुलिपल्लवाभ्यां वदनमुन्नमय्य।
कथमियं यथावत्कलभाषिणी?

Digitized by Google

मुदितः कदा म्रयिष्ये मुखमिदमाघ्राय मुकुलितापाङ्गम्।
मुग्धस्मितं च रतान्ते मुंक्तातङ्कमुद्रितकपोलम्॥

"किं ब्रवीषि? कितव! किमेतेन धूर्त्तालापेन? न श्रुता किं किम्बदन्ती च? "वेश्यामपि वसन्तरेखामसूर्य्यम्पश्या-मकरोदर्थपाल इति।" तदलमेतेन कुकुटाचारेण। नहि नेपालिकाजातिर्दाक्षिणात्यवदनाचारा, मुञ्च पाणिमिति?" साट्टहासम्। जानामि ते पातिव्रत्यमर्थपालशौर्य्यञ्च। पुरोऽव-लोक्य। सानन्दम्।

कलहाररचितचूली केलीगमनेन गर्हितमराली।
कापि नगरप्रतोलीमालिभिः साकमागता चोली॥

कर्णमभिनीय। सखि मन्दारमालिके! सह कुशलिनी त्वं रागवर्द्धनेन? किं ब्रवीषि? "भाव! किमेतेन निर्धनराग-वर्द्धनेन? मातङ्ग इवागत्य मार्ज्जार इव निर्गतोऽभूत् इति?" तर्जनीमाघूर्णयन्। साधु मन्दारमालिके! साधु! कुशलासि खलु कुवेरमपि कौपिनं परिधापयितुम्। सख्यः समाक्र-यन्ति, गम्यतां प्रकृतकार्य्याय। पार्श्वमुद्दिश्य सानन्दम्।

वलयिनि मणिबन्धे वर्त्तमाने सलीलं
शुकमुचितवचोभिः स्वैरमालापयन्ती।
मदहसितमनोज्ञा मन्मथाद्वैतविद्या-
मुपदिशति विलोलैरुत्पलाक्षी कटाक्षैः॥

किमियं पाणिपल्लवेन परामृशन्ती लीलाशुकमाला-पयति?

"रागं मुखे वहसि, रञ्जयितुं च वाचा
दक्षोऽसि, दर्शयसि मय्यपि पक्षपातम्।
जाने तथापि चपलं प्रियदर्शन! त्वां
बध्नामि मत्करगतमणिपञ्जरेऽस्मिन्॥"

इति। विस्मय मदुद्देश एवायमालापो, नूनमेषा न केवलमर्थपरा, कामपरा च प्रतिभाति। भवतु गत्वा जानीमः। पदान्तरं गत्वा स्वस्ति ते शुकविनोदनाय कथय, कलालापिनि! कस्य कामिनो भागधेयमुल्लासयति? "सम्प्रणयमेवोपम्।" अपवार्य्य करभोरु! यथार्थवादिनं लीलाशुकं कर्णोत्पलेन किन्ताड़यसि? किं ब्रवीषि? "गणिकाजनगर्हितमध्वानमाश्रयन्ती न कस्याहमुपालम्भपात्रमिति?" मधुरभाषिणि! मैवमवोचः।

मान्या त्वमेव हि मनोहररूपवेषैस्तारुण्यमद्य तरुणैश्चरितार्थयन्ती।
अन्यैः किमर्थकृपणैर्जड़जीर्णभोग्यतारुण्यसंपदुदयैः सुदृशां समूहैः॥

किं ब्रवीषि? "स्तुवन्तु निन्दन्तु वा, सर्वं कुलक्रमागतमखिलधनं सकलविदग्धेभ्यो दत्त्वापि महति राजपथे मकरध्वजमभिषेक्ष्यामि। तद्विदग्धजनमूर्द्धन्य! निर्लज्जया निबद्धोऽयमञ्जलिः, सकृदपि त्वया समागन्तव्यमिति।" सानुरागम्। चारुहासिनि! निदेशवर्त्तिनि दासजने किमत्यादरेण? संह्रियतामयमञ्जलिः। सत्यमागच्छामि, शपामि ते पादपङ्कजेन, क इव करतललग्नं मुञ्चेत माणिक्यम्। गच्छामि रङ्गोत्सवाय। पुरोऽवलोक्य।

परिहितपट्टदुकूलाः पवनसमुद्धूतपाण्डुरोष्णीषाः।
करतलकम्पितखड्गाश्चित्रममीयान्ति कामिनः पौराः॥

Digitized by Google

किञ्च।

आच्छाद्य सननमञ्जलीमभिनवज्योत्स्नायानिभैरंशुकै-
र्भूयस्तत्प्रतिबिम्बितैरवयवैः सम्मोहयन्त्यो जगत्।
रम्याभोगनितम्बगौरवशाम् मन्दायमानैः पदैः
पश्यायाकुलहारनूपुरमिमा गच्छन्ति पौराङ्गनाः॥

समन्तादवलोक्य सकौतुकाश्चर्यम्।

क्रीडाशैले मदकलमसौ चञ्चलैरर्द्धचन्द्रैः
केकारावं रचयति मुदा केलिलोलः शिखण्डी।
मन्दं मन्दं मदनतरलं सैकते सञ्चरन्ती
दीनारावं दिशति गगने दीर्घिकाराजहंसी॥

किन्नाम निमित्तमेतस्य? किञ्चिदभ्योदशङ्कां पश्यामि।
श्रुतिमभिनीय। सर्वथा समारब्ध एव रङ्गोत्सवः तथा हि।

नवाम्बुवाहस्तनितानुकारी विजृम्भते दिक्षु पदम्निबन्धन्॥
महोत्सवारम्भविशेषशंसी मनोहरो मङ्गलतूर्य्यनादः॥

तदविलम्बितमेव गन्तव्यम्। वामतोऽवलोक्य। मनोहरोऽयं समवायः। परस्पराकर्षितविनोदानां विलोलविलासिनीनाम्। सप्रश्रयकौतुकम्। कथमत्रैव मे सखा विलासवीरो विलासवत्या सह मधुसंरम्भेण द्यूतकलहमातनोति? किञ्चिदुपसृत्य। सखे विलासवीर! केन जनेन प्रवर्त्तते वां द्यूतविनोदः? किं ब्रवीषि? "यद्यहं पराजितः स्याम्, अस्यै दास्यामि हसकटकम्, एकवारमधःशयनं च। यद्येषा, स्वकण्ठादवमुच्य मह्यमर्पयिष्यत्येकावलीम्, एकवारमधरपल्लव-

र्थेति?" साधु रे साधु! माननीयः खलु भवान् पद्यबन्धचातुर्य्येण।

सीत्कारगर्भमुदरं स्वयमेव दत्तं
जेता यदि त्वमनुभुङ्क्ष्व मदालसायाः।
आलोलहारमथिकुण्डलमन्यथा चेत्
अस्या लभस्व पुरुषायितमायताक्ष्याः॥

पदान्तरं गत्वा पुरोऽवलोक्य। अहो! रमणीयता नयनपिधाने कौतुकस्य, यदेष चतुरङ्गविहारिणीम्।

मूकीभूतमुखीं विधाय नयनस्पन्देन दूरात्सखीं
पश्चान्मन्दमुपेत्य पाणियुगलेनाच्छादयन्त्या दृशौ।
अङ्गैस्तत्स्वजायमानपुलकैर्जानन्नपि प्रेयसीमस्याः
सस्पृहमान्मप्रवयवान् आख्याति नाम्नां युवा॥

पुरोऽवलोक्य। कथमसौ वसन्तसेनायास्ताम्बूलकरण्डवाहकस्ताण्डवसुन्दरमायाति। किं ब्रवीषि? "त्वर्य्यतां त्वर्य्यतां स्वामिन्! किमद्यापि विलम्बेनैवं समाश्रितविशेषोपकरणा देवी भवन्तमेव प्रतिपालयतीत्यहमागतोऽस्मीति।" कथय रे को वा विशेषो रङ्गस्य? किं ब्रवीषि? "कोऽयमतः परं विशेषो नाम? सोऽपि षोडशसहस्रान्तःपुरविहारधूर्त्तो वरदराजः करिगिरिशिखरादवतीर्य्य स्वयमेव कल्पितलीलाविलासवेषः सकलरसिकजनधौरेयतामवलम्ब्य माघादिभिरागतान् सम्भावयन् विलासमण्डपमध्यास्त इति?" तच्छ्रु-



Digitized by Google

श्रमितः प्राप्तोऽस्मि। पुरस्तादवलोक्य। अहो! रमणीयता मण्डपस्य, यदिदानीम्।

सम्भावितं सपदि हर्म्यतलं विमानै-
र्द्वारं निखातकदलीयुगलाभिरामम्।
स्तम्भावली च रचिरा विमलैर्दुकूलै-
र्वर्ण्येत हन्त वचसा कथमस्य लक्ष्मीः?।

वामतोऽवलोक्य साश्चर्य्यम्।

गण्डस्थलस्फुरितकाञ्चनकर्णपत्रं नासाविलीननवमौक्तिकशोभनीयम्।
आबद्धकञ्चुकमलक्षितमध्यभागमायाति वृन्दमिदमान्ध्रविलासिनीनाम्॥

किं ब्रवीषि? "स्वामिन्! न केवलमेकस्मादन्येभ्योऽपि देशेभ्यः समागताः विलासिन्यः पश्य।

केशान्तरालगतकेतकपत्रजालं कस्तूरिकाकलितकोमलभालमूलम्।
विन्यस्तकुङ्कुमविशेषकमुत्पलाक्षं कर्णाटयौवतमिदं कमनीयवेषम्॥

स्वामिन्! इतो दीयताम् दृष्टिः।

मुक्ताकञ्चुकसंछन्नाः पाण्ड्यनारीपयोधराः।
मेरुमन्दरविन्ध्यादीन् हसन्तीव महागिरीन्॥"

किमिदं परं कौतुकं रङ्गमण्डपस्य? "पश्चिमभागमवलोकयतु स्वामी।

कर्णोत्पलं नयनकान्तिभिरेव पीतं
गात्रप्रभासु कनकाभरणं निमग्नम्।

विम्बाधरस्य रुचिभिः पिहिता च लाक्षा-
लाटीषु हन्त लघुभूयमेवमासीत्॥

एवमनेकदेशादागता विलासिन्यो वर्णयितुं न शक्या इति" साधु सखे! पटीयानसि। पश्य।

कल्पितचन्दनतिलकं कर्णपरिस्फुरितकनकताटङ्कम्।
कवलयति मानसं मे कान्तं कर्णाटकामिनीवदनम्॥

नेपालीगण्डपालीषु कस्तूरीपङ्कविन्दवः।
वदन्ति मदनेभस्य मदनिस्यन्दिनीं दशाम्॥

सखे! सहैव समागच्छ, समाजं प्रविशावः। पुरोऽवलोक्य। शिरस्यञ्जलिं घटयन्। पश्य। य एष सभानायकत्वेन सिंहासनस्थोऽस्ति गिरीशो भगवान्।

भुवनानि विमोहयन् पुरस्तादपुना सोऽयमुपाविशद्विलासी।
मदनोपनिषद्रहस्यविद्यां यमुनासीमनि वल्लवाङ्गनानाम्॥

ससम्भ्रमं पश्चादवलोक्य। सखे! किमर्थं विलम्बितोऽसि? पश्य। तत्रभवता वरदराजेन सबहुमानमाहूय स्वकण्ठादवमुच्य मृगमदस्यन्दिनीं सौगन्धिकमालां स्वाङ्गोपलालितमङ्गरागञ्च दत्त्वा सभाजितोऽस्मि। समन्तादवलोक्य।

पश्चाद्द्वये कल्पितपङ्क्तिरेषा सभा हरिन्नायकमुद्वहन्ती।
विराजते मौक्तिकयष्टिरम्या रङ्गश्रियः कण्ठगतेव रम्या॥

किं ब्रवीषि? "सा दृष्टा वसन्तमहोत्सवव्यापृता वसन्तसेनेति" सखे! किञ्च पश्यसि।

Digitized by Google

समीक्ष्य मां सस्मितमञ्चितभ्रूः सखीमनिर्दिष्टनिवासभूमिः।
करोल्लसल्लाञ्छनवेत्रयष्टिः करोति रङ्गक्षितिमायताक्षी॥

तत्रैवोपविशाम:। किं ब्रवीषि? "गच्छामि कार्य्यान्तरकरणाय, गृह्यतामयं ते प्रणयसुहृत्सङ्गीतशेखर इति?" तर्हि गच्छ सङ्गीतशेखर! अनुनीय शयनं सकृदपि आरोपिता किमभिनवयौवनारम्भकन्दलित मन्दाक्षमन्दायमानमशोत्सवानन्दा मन्दाकिनी। किं ब्रवीषि?

"कुर्य्यां प्रसाधनविधिं कुचयोः सरोषं
किञ्चिन्नखैरधिकमुत्पुलका च बाला।
सीत्कारमातनुत हन्त स एव वान्दी
कन्दर्पकेलिकलहाङ्कुरनाटिकायाः॥"

सखे! सम्प्रति किं वर्ण्यतेऽस्या रतिरहस्यसौभाग्यम्।

पश्यन्तीं परिरम्भकेलिषु मुहुर्न्निःसङ्गमालिङ्ग्य तां
प्रोत्फुल्लत्कलमप्रदीपमधरं स्पृष्टावली साप्यभूत्।
नाहं वेद्मि न वेत्ति सा च दयिता तत्रावयोश्चेष्टितं
शय्या वेत्ति न वेत्ति वा स तु कुतः संग्रामसाक्षी स्मरः॥

इति सकौतुकम्। पश्य सखे! वामभागं वसन्तसेनायाः।

कैषा का च न योषा भूषामणिकिरणभूषितैरङ्गैः।
सन्ध्यारागविमृष्टा संदृष्टा भवति चन्द्ररेखेव॥

किं ब्रवीषि? "किमद्यापि न जानासि सा खलु विलासपुरादागतविशालाक्षी सकललोकलोचनानन्दचन्द्ररेखेति"।

Digitized by Google

स्मरणमभिनीय तर्हि शृणुमः । नृत्यगीतवाद्यादिषु महाविद-
ग्धेति निरतिशयनिखिलसम्भोगदायि गम्भीरमस्यास्तारुण्यम् ।

आनन्दीमधिगन्तुमिच्छति दशामस्याविलम्बं क्षमा-
दालापो विरसीकरोति महतामाहारवार्त्तामपि ।
सन्नाहः स्तनयोरयं न सहते चापोन्नतिं शाम्भवीं
व्यापारो नयनस्य वाञ्छति हरेराद्यावतारश्रियम् ॥

कथं साम्प्रदायिकैरङ्गनेपथ्यमुपक्रान्तमेव ।

तन्त्रीं केचन बोधयन्ति मधुरैर्मञ्जुस्वरोद्गारिणीं
मायूरीं रचयन्ति मर्दलमुखे मालां परे मूर्च्छनाम् ।
शङ्खं केचन पूरयन्ति कतिचित्संप्राप्तमौनव्रता
वंशीं केचन वादयन्ति च परे कर्णोचितां माधुरीम् ॥

ससम्भ्रमम् । साधु विनयातिशय ! साधु ।

निषिञ्चदमृतद्रवैः श्रवणमाशु तन्त्रीरवैः
प्रपञ्चपरिमोहनं किमपि गीतमुज्जृम्भते ।

ऊर्द्ध्वमवलोक्य ।

अयञ्च पुनरम्बरं पुनरमुष्य सम्भावय-
न्नुदञ्चति शनैः शनैरुपरि कोऽपि पुष्पाञ्जलिः ॥

नेपथ्याभिमुखमवलोक्य । चिराय चरितार्थं चक्षुः ।

उन्मिश्रां विरचय्य ताण्डवनिकामुखैः क्वणत्कङ्कणां
पादौ नूपुरमञ्जुकदम्बकौ पर्य्यस्यत्कम्पती ।

दूरोल्लासितकौतुकस्य सहसो दुर्लक्ष्यमेधाकृति-
र्नेपथ्यान्तरितेव निश्चलयते नेत्राणि शातोदरी ॥

कथमपनीतमेव नेपथ्यम्। पश्य तावत्।

कल्हारपत्त्रोज्ज्वलकेशपाशं गाढावबद्धस्तनकञ्चुलीकम्।
अङ्ग प्रवाड्रोत्थकशोभनीयमाभाति रङ्गोचितमङ्गनायाः ॥

सङ्गीतशेखर। सकृदपि सम्भावयते मित्रसौभाग्यं यदि-
दानीम्।

चित्रलिखितेव बाला रेखासौभाग्यनिश्चलैरङ्गैः।
कलयति हि मानसम्मे सञ्चितमनुरागशंसिभिः पुलकैः ॥

निकषोपलः खलु भवान्नृत्यविद्यायाः।

मूर्त्ताग्निर्द्रितीव लोचनमिदं हावान् जगन्मोहना
वाख्याताविव लोलनूपुरतया पादौ च तालक्रमात्।
अध्यस्तानिव कल्पयन्त्यभिनयैरङ्गानि चार्थान्नवान्
कण्ठे नोद्गिरतीव कामपि सुधां कर्णोपभोगोत्सुकाम् ॥

सकौतुकम्। कथमेषा विविधकलोचिता?

दर्शितबङ्कप्रयोगा स्थित्वा रङ्गे कलाचिता तन्वी।
पश्यति हि मां कटाक्षैः पुलकितकन्दर्पवीरभुजदण्डैः ॥

चन्द्रं कलङ्करहितं, शफरद्वयञ्च निस्तोयमन्धतमसञ्च सुगन्धि तन्व्याः।
व ल्लुञ्चनेन भुवि दृष्टवतो विधातुर्वर्ण्येत, केन करकौशलमद्भु तन्तत्? ॥

साश्चर्यम्। किं ब्रवीषि? "सम्भावयति भगवान्! वरद-
राजो दृष्टदिव्यनृत्यगीतोऽप्यनेन नृत्यगीतादिना सन्तुष्टः।

स्वदेवीभोगलालितैर्दिव्याभरणादिभिर्वासन्तिकामिति ?"।
तर्हि गच्छामि। अयमेवावसरः प्रेयसीं सम्भावयितुम्।
सलीलमुपसृत्य। अस्तु कुशलं प्रेयस्यै वासन्तिकायै।

न परं रूपलावण्यैस्त्वया मूर्ध्नि न्यगोदृशाम्।
विद्ययापि विशालाक्षि! विन्यस्ता वामपादुका॥

किं ब्रवीषि? "पण्डितः खलु भवान् हृयामपि स्तुती कर्त्तुम्। भवादृशां बहुमानमन्तरेण नास्ति मे विद्याकणि-केति?"। सशिरःकम्पम्। विनयः खलु भूषणं विद्यायाः। वर्णनीयं किमेतद्वासन्तिकायाः तथापि ब्रवीमि। चोल-केरल-नेपाल-मालव-मगध-कलिङ्ग-कर्णाटकप्रभृतिविविधदेशागत-विटनिकरसङ्कीर्णसकलविद्यारसिकजन्मभूमिरपि त्वया दासीकृतैव रङ्गस्थली। अपवार्य। सखि! वसन्तसेने! दिष्ट्या वर्द्धसे वासन्तिकामहोत्सवेन। सस्मितं हस्ते गृहीत्वा। किं ब्रवीषि? "भवति स्थिते का नामाहं वासन्तिकामहोत्सवस्य?" विदितसकलवेदितव्यस्य, न किञ्चिद्वक्तव्यमस्ति। तथापि ब्रवीमि, सर्वं शासनपूर्वमेव वारसुन्दरीरभिनयं कुर्वन्ति त्वयापि वासन्तिकायै नटनर्तकविटविदूषकसमाजेऽस्मिन् किमपि शासनं दातव्यमिति विभाव्य सस्मितं तथा करोमि। समन्तादवलोक्य। कथं लिखितमेव सामाजिकैः। किञ्चिदवधारय। स्वस्ति समस्त-भुवनैकवीरहरिहरहिरण्यगर्भवशीकरणवामाङ्गनावक्षःस्थल-स्थापितजयस्तम्भशम्बरभिदि सार्वभौमपदमनुभवति मधुरधनुषि मकरध्वजे मधुमासपौर्णमास्यां काञ्चीपुरीवास्तव्यः शृङ्गारशेखरो वासन्तिकायै कलत्रपत्रमर्पयति।

मासान् सप्त ममेयमस्तु रयिता दास्यामि चास्यै शतं
दीनाराण् प्रतिमासमम्बरयुगं नित्यं शतं वीटिकाः ।
आमोदं कुसुमं च वाञ्छितमसौ मध्येऽप्यमोचैव चे-
द्धत्वा तद्द्विगुणं कलम ! तु पुनर्मासानियं सप्त च ।

इत्थं कृतं शृङ्गारशेखरेण । इत्थमवगतं रागवर्धनेन । एवमनुमितं कुसुमसौरभेण । एवमवबोधितं रतिवल्लभेन । एवमुभयेच्छा लिखितमिदं चित्रलेखेन निरवद्यमिदं सम्यक्परिपाल्यताम् । इदमपि लिखितं पुरा मे वल्लभाया वासन्तिकायाः किमपि लौकिकमेव । आसामपरं कलासु वैलक्षण्यम् । जनान्तिकम् । द्यूते चौर्ये निष्प्रतिद्वन्द्वोऽस्मि पञ्चषपच्चैरेव पुरमशेषं पुरावाखर्वशेषं विधाय कनकवर्षेण भवनं ते पूरयिष्यामि । पत्रञ्चैतत्परिपालय । किं ब्रवीषि ? "भाव ! किमन्यदाशास्यम् ।

यौवराज्यमनङ्गस्य युवयोर्नवयौवनम् ।
इदानीमस्तु साम्राज्यमिदमप्यायतेप्सितम् ॥

तद्गच्छ यथेष्टं विहर वासन्तिकया सहेति ।" सानन्दम् । परमनुगृहीतोऽस्मि । परिक्रम्य वासन्तिकमाश्लिष्य । अद्य खलु निष्कण्टमनङ्गसाम्राज्यं ; निर्विंश । सोत्प्रासम् । सुगात्रि ! सम्प्रति हि ।

पूर्वत्राभीसरसि ललिता पुष्पिता कान्तिलावैः
पश्चान्मध्ये स्मितविचिषमे प्रस्खलन्ती क्रमेण ।

प्राप्ता भूयस्तनभरमितः प्राप्तुकामा मुखान्ते
कण्ठेश्वया भ्रममदमिसत्वाद्ये हृत्पिराक्ते ॥

सस्मितम्। सुभ्रु! किमेतेन साचीकृतविलोकनेन। सत्यमागच्छामि। शपामि ते कुचकलशेन। परिश्रान्तोऽस्मि। परिणतो वासरश्च। पश्य पश्य। सोऽयमवलम्बितमञ्जिकारमणपटुतरनटनहस्तविस्रस्तकनकडमरुकविडम्बी गगनतलविहरदमरपुरवारयुवतिकरकमलगलितरामणीयकमणिकटककान्तिर्मन्दाकिनीविकटतटविलसदुटजविबुधगणवितीर्णसायन्तनसमयनियमाञ्जलिसलिलसहपतिततपनीयारविन्दसन्देहवाहिनीनिरवधिकतरङ्गितनिखिलमङ्गलारम्भभवदीयरङ्गोत्सवदर्शनकुतूहलागमनवेगविभ्रष्टविद्याधरवरवर्णिनीवर्णनीयसुवर्णवर्णपत्रानुकारी परिसरचरदरुणपुरवरतनुचटुलचरणमणिकटकविद्रुमरकिरणकदम्बचुम्बित इव समापतदपरिमितरजनीचरसुभटनिशितशरविदलितनिजतनुगलित रुधिरनिकुरम्बकरम्बित इव रणकठोरकलाभिघातपरिकुपितजवननिजतुरगखुरधूलीपालीकवलित इव सरभसपतितकटकतटघनरवरथचरणघनरवनिशमनसुखनिष्कम्पशवरकुलमवतरति चरमगिरिवरनितम्बमम्बरतलादंशुमाली।

तव रत्नमहोत्सवं दिदृक्षुर्वरवामान्तःपुरवामलोचनानाम्।
मणिदर्पणमण्डलानुकारी भजते पश्चिमशैलमंशुमाली ॥

सन्ध्याताण्डवचण्डचण्डपरशुप्रारब्धभीमभ्रमी
वल्गत्कपर्दवासुकिफणामाणिक्यशङ्कावहम्।

Digitized by Google

मग्नं पार्थसि पश्चिमस्य जलधेर्मार्त्तण्डबिम्बं ततो-
ध्वान्तैर्भूतगणैरगाहि भुवनं मन्ये तदन्वेषिभिः ।

समन्तादवलोक्य। नतोदरि! तव वृत्तान्तमनुकरोति वासवीयं पश्य ।

आगीताङ्करपल्लवैरपनयन्नच्छाम्बरं कश्चुकी
माशां सम्प्रति वासवीमनुभवन्नचीणरागः शशी ।
अस्याश्च स्तनसङ्गिनीमिव वहत्यङ्केन कस्तूरिका-
मालिङ्गत्ययमादरेण रजनीमर्द्धाम्बितत्तारकाम् ॥

किञ्च ।

प्रशाङ्के सन्नद्धे भरत इव सन्ध्यायवनिका
तिरोभूत्वा पुष्पाञ्जलिमिव विकीर्योडुनिकराम् ।
कलं गायन्तीभिः कुमुदवनभृङ्गीभिरधुना
नभोरङ्गं प्राप्ता विहरति निशाशासिकवधूः ॥

तदहं भुक्त्वा गृहीतताम्बूलस्य भवनमेवागच्छामि ।

तन्वङ्गि ! तरलापाङ्गं तव रागतरङ्गितम् ।
आलोकनमिदं जीयादनङ्गकुलदैवतम् ॥

किं ब्रवीषि ? "वसन्तसेनायास्तत्तदभिमतवस्तुभिः सर्वे विलासिनः सम्भाविताः । तेषामग्रे सम्भावनीयस्य भवतः किं वा प्रियमिति ?"

शृङ्गारशेखरः । कलभाषिणि ! एतदेव प्रियम् । यतः ।

Digitized by Google

ब्रह्मैव वामचरणं कृतमत्सराणां
चूडापदे सकलवारविलासिनीनाम्।
सम्भावितासि वरदेन महासभायां
चिह्नैरनन्यसुलभैः सितचामराद्यैः॥

किञ्च।

कटकेषु जयन्तु भूपतीनां कवयः काङ्क्षितकल्पपादपानाम्।
वचसां रसपानदिव्यगन्धैर्मधुनिष्यन्दमनोहरैर्निगुम्फैः॥

तथाप्येतदस्तु भरतवाक्यम्।

अनपेक्ष्य चरित्रमङ्गनानामधुना कामुकचित्तहारिणीनाम्॥
अनुरागमकृत्रिमं वहन्तीं चिरमुज्झोलमपश्चितजन्मलक्ष्मीम्॥

काञ्चीपुरीमधिवसन् कमनीयभूमा
कामीव एष वरदः कमलालयायाः।
आकल्पयन्वसुमतीमनुकल्पमेनां
कल्पद्रुमो भवतु कश्चन मानवानाम्॥

इति निष्क्रान्तः।

इति वसन्ततिलकभाणः समाप्तः।

---

## THE FOLLOWING IS THE LIST OF
### PROFESSOR TARKAVACHASPATI'S
## WORKS & PUBLICATIONS.



| No. | Title | Rs. | As. |
|---|---|---|---|
| 1. | Asubodham Vyakaranam. ... ... | 3 | 4 |
| 2. | Dhaturupadarsha. ... ... ... | 2 | ,, |
| 3. | Sabdastoma Mahanidhi. ... ... | 10 | ,, |
| 4. | Sidhantakoumudi with Sarala. ... ... | 11 | ,, |
| 5. | Sidhantavindusara. ... ... ... | ,, | 8 |
| 6. | Tuladanadipadhati. ... ... ... | 4 | ,, |
| 7. | Gaya Shradhadipadhati. ... ... | 1 | ,, |
| 8. | Sabdartharatna. ... ... ... | ,, | 12 |
| 9. | Vakyamanjari. ... ... ... | ,, | 4 |
| 10. | Vrittaratnakara and Chhandomanjari with notes. | ,, | 10 |
| 11. | Venisanhara with a Commentary. ... | 1 | ,, |
| 12. | Mudrarakshasa. Ditto ... ... | 1 | 8 |
| 13. | Ratnavali Ditto ... ... | 1 | 8 |
| 14. | Malavikagnimitra. Ditto ... ... | 1 | 8 |
| 15. | Dhananjayavijaya. Ditto ... ... | ,, | 4 |
| 16. | Mahaviracharita. Ditto ... ... | 1 | 8 |
| 17. | Sankhyatatwakoumudi. Ditto ... ... | 2 | 8 |
| 18. | Veiyakarana Bhusanasara. ... ... | 2 | ,, |
| 19. | Lilavati.... ... ... ... | ,, | 12 |
| 20. | Vijaganita. ... ... ... | 1 | ,, |
| 21. | Sishupalabadha with Mallinatha. ... | 6 | ,, |
| 22. | Kiratarjuniya. Ditto ... ... | 2 | 8 |
| 23. | Kumarasambhava Purvakhandam. Ditto ... | 1 | ,, |
| 24. | Kumarasambhava Uttarakhandam. ... | ,, | 8 |
| 25. | Panini Sutras. ... ... ... | ,, | 12 |
| 26. | A comprehensive Sanscrit Dictionary ( In the Press ) | 60 | ,, |
| 27. | Kadambari with a commentary. ... ... | 4 | ,, |



Digitized by Google

| | | | |
|---|---|---|---|
| 28. Rajaprasasti. ... ... ... | „ | 2 |
| 29. Gayitri. ... ... ... | ... | |
| 30. Anumanachintamanididhiti. ... ... | 2 | 8 |
| 31. Sarvadarshanasangraha. ... ... | 2 | „ |
| 32. Bhaminibilasha with notes. ... ... | 1 | „ |
| 33. Hitopodesha with notes. ... ... | 1 | „ |
| 34. Bhasha parichheda and Muktavali. ... | 1 | „ |
| 35. A discourse on the Hindu polygamy. ... | „ | 4 |
| 36. Dashakumaracharita with notes. ... | 1 | 8 |
| 37. Paribhashendusekhara. ... ... | 1 | 8 |
| 38. Kavikalpadruma. ... ... ... | „ | 8 |
| 39. Chakradatta. ... ... ... | 2 | 8 |
| 40. Unadisutra with a commentary. ... ... | 2 | „ |
| 41. Medini Kosha. ... ... ... | 2 | 8 |
| 42. Panchatantra of Vishnuharma. ... ... | 2 | 8 |
| 43. Bidwanmodatarangini. ... ... | „ | 8 |
| 44. Madhavachampu. ... ... ... | „ | 6 |
| 45. Tarkasangraha with an English translation. ... | „ | 8 |
| 46. Prasannaraghava of Jayadeva. ... ... | 1 | 8 |
| 47. Vivekachuramani. ... ... ... | „ | 6 |
| 48. Kavyasangraha (complete work.) ... | 5 | „ |
| 49. Linganushashana with a commentary. ... | „ | 4 |
| 50. Ritusanhara with a commentary.... ... | „ | 6 |
| 51. Vikramorvashi with a commentary. ... | 1 | 8 |
| 52. Vasantatilaka. ... ... ... | „ | 6 |

Apyly to Pandit Jibananda Vidyasagara B. A.

The 5th June 1872. } *Govt. Sanskrit College.* CALCUTTA.

Digitized by Google